21/M

# संस्कृत-प्रवेशः

## भागः 2

( षष्ठ वर्गस्य कृते )

बिहार स्टेट टेक्स्टबुक पब्लिशिंग कॉरपोरेशन लिमिटेड

**निदेशक, विद्यालयीय शिक्षा, बिहार द्वारा स्वीकृत**

लेखक

**डॉ० बच्चू झा**

समीक्षक

आचार्य देवेन्द्रनाथ शर्मा

डॉ० रामदेव त्रिपाठी

डॉ० परममित्र शास्त्री

डॉ० बच्चू झा

श्री रामनारायण पाण्डेय



| | | |
|---|---|---|
| संशोधित संस्करण | : | 1981 —4,00,000 |
| पुनर्मुद्रण | : | 1982-83—5,00,000 |
| पुनर्मुद्रण | : | 1983-84—1,03,000 |
| पुनर्मुद्रण | : | 1984-85— 87,000 |
| पुनर्मुद्रण | : | 1985-86—1,00,000 |
| पुनर्मुद्रण | : | 1986-87—2,40,000 |
| पुनर्मुद्रण | : | 1987-88—4,00,000 |
| पुनर्मुद्रण | : | 1988-89—1,00,000 |
| **पुनर्मुद्रण** | : | **1989-90-1,00,000** |

मूल्य : रु० 2.25

**बिहार स्टेट टेक्स्टबुक पब्लिशिंग कॉरपोरेशन लिमिटेड, ह्वाइट हाउस, बुद्ध मार्ग, पटना-1, द्वारा प्रकाशित तथा टेक्स्टबुक प्रेस पटना-1 में 1,00,000 प्रतियाँ मुद्रित।**

# प्रस्तावना

ईश्वर भाई जे० पटेल समिति की अनुशंसाओं के आधार पर संशोधित नए पाठ्य-क्रम के अनुसार संस्कृत का शिक्षण 1982 सत्र से वर्ग-3 से ही प्रारम्भ हुआ है।

नए संशोधित पाठ्य-क्रम के आधार पर यह संशोधित पुस्तक आपके हाथ में है जो अब संस्कृत की चौथी पुस्तक है।

**प्रबन्ध निदेशक**

**बिहार स्टेट टेक्स्टबुक पब्लिशिंग कॉरपोरेशन लिमिटेड, पटना-1**

# विषय-सूची

| क्रम-सं० | विषय | पृष्ठ-संख्या |
|---|---|---|

| क्रम-संख्या | विषय | | | पृष्ठ-संख्या |
|---|---|---|---|---|



---

प्रथमः पाठः

# गुरुस्तवनम्

**अखण्ड, तिमिरान्धस्य, ज्ञानाञ्जन, उन्मीलितम्, वक्रः, शलाका, वन्द्यते ।**

वन्दे बोधमयं नित्यं, गुरुं शंकर-रूपिणम् ।
यमाश्रितो हि वक्रोपि, चन्द्रः सर्वत्र वन्द्यते ॥ 1 ॥

गुरुर्ब्रह्मा गुरुर्विष्णुः, गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म, तस्मै श्रीगुरवे नमः ॥ 2॥

अखण्डमण्डलाकारं, व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन, तस्मै श्रीगुरवे नमः ॥ 3 ॥

अज्ञानतिमिरान्धस्य, ज्ञानाञ्जन-शलाकया ।
चक्षुरुन्मीलितं येन, तस्मै श्रीगुरवे नमः ॥ 4 ॥

### अभ्यासः

1. गुरुस्तवन को कण्ठस्थ करो ।
2. संस्कृत में उत्तर दो :—
   (क) बोधमयः नित्यः गुरुः कः अस्ति ?
   (ख) वक्रः अपि चन्द्रः कथं वन्द्यते ?
   (ग) गुरुः किं करोति ?
   (घ) गुरुः किं पदं दर्शयति ?
3. इस पाठ के श्लोकों का अर्थ अपनी मातृभाषा में लिखो ।
4. गुरोः भक्त्या कः लाभः भवति ?

द्वितीयः पाठः

# पाटलिपुत्रनगरम्

**राज्ञी, भव्याः, सर्वकारेण, राजमार्गः, धूम्रयानस्थितिस्थानम्, जलयानस्थितिस्थानम्, न्यवसत् ।**

त्यागबलिदानयोः भूमिः इदं पाटलिपुत्रनगरमस्ति । इदं अधुना विहारप्रान्तस्य राजधानी वर्तते । पुरा चन्द्रगुप्तस्य राजधानी अत्रैव आसीत् । चन्द्रगुप्तस्य गुरुः महान् राजनीतिज्ञः चाणक्यः अत्रैव पर्णकुटीरे न्यवसत् । स चाणक्यः अर्थशास्त्रस्य नीतिशास्त्रस्य च अद्वितीयः विद्वान् आसीत् । अतिदयालुः राजा अशोकः अस्मिन्नेव पाटलिपुत्रे निवसति स्म । इदं नगरं गंगायाः दक्षिणे तटे अवस्थितमस्ति । इदं कुसुमपुर, पुष्पपुर, पाटलिपुत्र, अजीमाबाद आदि नाम्ना इतिहासे प्रसिद्धमस्ति ।

राजा "महेन्द्रः" संघमित्रया सह बौद्धधर्मप्रचारार्थं पाटलिपुत्रादेव लंकां गतवान् । तेन एकः नगरभागः "महेन्द्रू" इति कथ्यते ।

राज्ञः महेन्द्रस्य पत्नी अत्र प्रतिदिनं गंगा स्नातुं आगच्छति स्म तेन महेन्द्रू-निकटे गंगातटे अधुना एकः "रानीघाट" नाम्ना

प्रसिद्धः घट्टः वर्तते । जलयानस्थितिस्थानम् अपि "महेन्द्रू घाट" इति कथ्यते अर्थात् सोऽपि मूलतः एकः घट्ट एवासीत् ।

अस्मिन् नगरे सचिवालय, उच्चन्यायालय, संग्रहालय, गोलघर, पटनदेवी, गुरुगोविन्दसिंहजन्मस्थान, अगमकुआँ, पटना विश्व-विद्यालय प्रभृतीनि दर्शनीयस्थानानि सन्ति ।

विश्वविद्यालये विज्ञानं पाठयितुं "विज्ञान महाविद्यालयः" कलाविषयान् पाठयितुं "पटना महाविद्यालयः", वाणिज्यं पाठयितुं "वाणिज्य महाविद्यालयश्च" वर्तन्ते । एवमेव चिकित्सां पाठयितुं प्रसिद्धः चिकित्सा-महाविद्यालयः विद्यते । अत्र बहवः भव्याः छात्रावासाः सन्ति । पटना विश्वविद्यालयस्य प्रशस्तः पुस्तकालयः अपि वर्तते । तत्र हस्तलिखिताः ग्रन्थाः अपि बहवः सन्ति ।

गोलघरस्थानं पाटलिपुत्रस्य गौरवमस्ति । इदं अन्नानि रक्षितुं निर्मितम् । अस्मिन् नगरे प्रवेशकाले दूरतः एव इदं दृश्यते । बहुविधपुष्प-सुशोभितेन उद्यानेन भव्यमिदम् । एतस्य उत्तरस्यां दिशि प्रसिद्धः राजमार्गः अस्ति । अत्रैव राजकीय बालिका उच्चविद्यालयः वर्तते ।

धूमयानस्थितिस्थानम् "पटना जंक्शन" इति कथ्यते । याता-यात-सुविधायै विविधपरिवहनयानैरलंकृतं नगरमेतत् । नगरसीमासु भव्याक्षरैः लिखितमस्ति-"पुनर्दर्शनाय" । एवं "इयम् राजधानी, भवतः गौरवमस्ति ।" एतस्याः स्वच्छता-संरक्षणं सर्वेषां नागरिकाणां कर्त्तव्यम् ।



"अभिनन्दयामः वयम् नगरमेतत्"

## अभ्यासः

1. निम्नलिखित शब्दों का अर्थ लिखो :–
   पर्णकुटीरे, अत्रैव, निवसति स्म, न्यवसत् ।
2. निम्नलिखित पदों का वाक्यों में प्रयोग करो :–
   पुरा, निवसति स्म, अस्ति, अधुना, उद्याने, स्नातुम्, प्राचार्यः, विभागाध्यक्षः ।
3. निम्नलिखित शब्दों के विपरीतार्थक शब्द बताओ :–
   राजा ······।
   गतवान् ······।
   पुरा ······।
   निकटे ······।
   अत्र ······।
4. नीचे लिखे प्रश्नों का उत्तर संस्कृत में दो :–
   (क) बिहारप्रान्तस्य राजधानी कुत्र वर्तते ?
   (ख) चन्द्रगुप्तस्य गुरुः कः आसीत् ?
   (ग) प्राचार्यः कः भवति ?
   (घ) पाटलिपुत्रे कानि दार्शनीयस्थानानि सन्ति ?
5. 'पाटलिपुत्र' का वर्णन दस पंक्तियों में लिखो ।

---

तृतीयः पाठः

# गुरुभक्तः आरुणिः

ब्रह्मचारी, आच्छन्नम्, अवरुद्धम्, सरितः, निर्झराः, कुल्याः, दीर्घिकाः, जलौघेन, झंझावातैः, रजन्याम् ।

पुरा धौम्यो नाम एकः महर्षिः आसीत् । तस्य आश्रमे अध्ययनाय बहवः ब्रह्मचारिणः निवसन्ति स्म । तत्र आरुणिः नाम एकः ब्रह्मचारी महान् गुरुभक्तः आसीत् ।

एकदा वर्षाकाले आकाशम् मेघैः आच्छन्नम् अभवत् । वर्षायाः आगमनं ज्ञात्वा महर्षिः आरुणिम् अकथयत्–"भो आरुणे ! इदानीं वृष्टिः भविष्यति । त्वं शीघ्रं क्षेत्रं गच्छ । तत्र गत्वा मृत्पिण्डैः बन्धं विरचय । बन्धेन अवरुद्धं जलं क्षेत्रे एव स्थास्यति ।"

गुरोः वचनं श्रुत्वा आरुणिः अकथयत्–"यथा आदिशति उपाध्याय" इति । गुरुं प्रणम्य स आदर्शः गुरुभक्तः क्षेत्रं प्रति चलितः । मार्गे महती वृष्टिः अभवत् । निर्झराः सरितः कुल्याः दीर्घिकाः सर्वा एव जलौघेन परिपूर्णाः अभवन् । समयः भयङ्करः अभवत् । साहसावतारः आरुणिः क्षेत्रं गत्वा पश्यति । महता वेगेन जलं क्षेत्रात् प्रवहति । स गुरुवचनं पालयन् जलप्रवाहं रोद्धुं मृत्पिण्डैः बन्धं निर्मातुं प्रवृत्तः । परन्तु जलस्य तीव्रेण वेगेन स सफलः न अभवत् । ततः अन्यम् उपायं न दृष्ट्वा आरुणिः यतः जलं निःसरतिस्म तत्र दण्डवत् प्रसुप्तः ।

एवं शनैः शनैः सूर्यः अस्तं गतः । रजनी समागता । सा मेघैः विद्युद्भिः गर्जनैः झंझावातैश्च अति-भयावहा संजाता । अस्यां भयङ्कररजन्याम् अपि आरुणिः गुरोः आदेशं पालयन् प्रस्तर इव निश्चलः आसीत् । इतः आदर्शम् आज्ञाकारिणं छात्रम् आरुणिं रात्रौ अनागतं दृष्ट्वा स्नेहेन व्याकुलः महर्षिः धौम्यः पृच्छति । इदानीम् अपि आरुणिः न आयातः ? पुत्रवात्सल्येन प्रातः शिष्यैः सह तम् अन्वेष्टुं चलितः ।

तत्र क्षेत्रं गत्वा सविस्मयं पश्यति आरुणिम् । स गुरुभक्तः स्वशरीरेणैव जलप्रवाहम् अवरुध्य स्थितः अस्ति । इदं दृश्यं दृष्ट्वा अश्रुप्लावितनयनः महर्षिः अकथयत्––

"अहो आरुणेः गुरुभक्तिः !"

शिष्याः परस्परं कथयन्ति अनेन गुरुभक्तिकर्मणा अस्माकं हृदयं द्रवीभूतम्। गुरुहृदयस्थाः सर्वाः विद्याः आरुणिं प्रति प्रचलिताः। स गुरोः आशीर्वादेन महान् विद्वान् अभवत्।

शिक्षा :—अतः गुरूणां वचनं श्रुतमात्रम् अनुतिष्ठ।
तान् द्विः आदेशक्लेशं मा प्रापय।

### अभ्यासः

1. निम्नलिखित शब्दों का अर्थ लिखो :—
   ज्ञात्वा, इदानीम्, क्षेत्रम्, प्रणम्य, जलौघः।
2. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :—
   आसीत्, ज्ञात्वा, गत्वा, तत्र, आदिशति, विरचय, अभवत्।
3. इनके पर्यायवाची शब्द लिखो :—
   जलम्, ब्रह्मचारी, गुरुः।
4. बताओ कि निम्नलिखित क्रियाएँ किन धातुओं से बनी हैं :—
   गत्वा, दृष्ट्वा, आसीत्, अकथयत्, प्रणम्य, श्रुत्वा, आदिशति।
5. इस कहानी से तुम्हें क्या शिक्षा मिलती है ?
6. इस पाठ के प्रथम अनुच्छेद का अर्थ अपनी मातृभाषा में लिखो।
7. निम्नलिखित वाक्यों का संस्कृत में अनुवाद करो :—
   (क) एक महर्षि था। (ख) आश्रम में छात्र रहते थे।
   (ग) एक बार बड़ी वर्षा हुई। (घ) जलधारा बहती है।
8. निम्नलिखित प्रश्नों का संस्कृत में उत्तर दो :—
   (क) महर्षिः धौम्यः कुत्र आसीत् ?
   (ख) आरुणिः कः आसीत् ?
   (ग) उपाध्यायः किम् अकरोत् ?
   (घ) आरुणिः किं कृतवान् ?
   (ङ) आदर्शः गुरुभक्तः कः आसीत् ?

---

चतुर्थः पाठः

# सूक्तयः

**कीर्त्तिः, अर्थाः, संहतिः, सहसा, विदधीत, छिद्रेष्वनर्थाः, महताम्, उपैति, त्यजति ।**

1. कीर्त्तिर्यस्य स जीवति ।
2. यस्यार्थाः तस्य मित्राणि ।
3. संहतिः कार्यसाधिका ।
4. सहसा विदधीत न क्रियाम् ।
5. छिद्रेष्वनर्था बहुली भवन्ति ।
6. सम्पत्तौ च विपत्तौ च महताम् एकरूपता ।
7. लोभः पापस्य कारणम् ।
8. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।
9. सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
10. गुरु-शुश्रूषया विद्या ।

### अभ्यासः

1. संस्कृत में उत्तर दो :–
   (क) कः जीवति ?
   (ख) कस्य मित्राणि भवन्ति ?
   (ग) अनर्थाः कुत्र भवन्ति ?
   (घ) महताम् कुत्र एकरूपता भवति ?
   (ङ) पापस्य किं कारणम् ?

(च) लक्ष्मी: कं पुरुषम् उपैति ?
(छ) पण्डित: कदा अर्धं त्यजति ?
(ज) विद्या कथं भवति ?

2. 'सूक्ति' से क्या समझते हो ?

3. इस पाठ की सूक्तियों को कण्ठस्थ करो।

4. नीचे लिखे वाक्यों का संस्कृत में अनुवाद करो :—
(क) गुरु की सेवा से विद्या होती है।
(ख) जिसके पास धन है उसके बहुत मित्र होते हैं।
(ग) छिद्रों के होने पर बहुत अनर्थ होते हैं।
(घ) लोभ पाप का कारण है।
(ङ) एकता कार्य को सफल बनानेवाली है।
(च) जिसका यश है वह जीवित है।

5. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :—
जीवति, मित्राणि, सम्पत्तौ, पापस्य, त्यजति।

6. रिक्त स्थानों को भरो :—
(क) ········ स जीवति।
(ख) संहतिः ·········।
(ग) ········ बहुली भवन्ति।
(घ) ······· न क्रियाम्।

7. किन्हीं पाँच सूक्तियों का वाक्यों में प्रयोग करो।

---

पञ्चमः पाठः

# कूर्म-शशकयोः कथा

**शशकः, कूर्मः, प्रकाशम्, पादपम्,**
**शाद्वलायाम्, दीर्घसूत्री, अतन्द्रितः।**

एकस्मिन् वने एकः शशकः न्यवसत्। एकेन कूर्मेण सह तस्य मैत्री अभवत्। एकदा शशकः कूर्मम् अकथयत्–"सखे, त्वं मन्दगामी असि, अहं शीघ्रगामी अस्मि।"

अनेन उपहासेन कूर्मः दुःखितः अभवत्, प्रकाशम् अवदत् च।



सखे, यदि त्वम् अभिमानेन कथयसि, तदा किमपि स्थानं स्थिरं

कुरु। मया सह तत्स्थानं प्रति प्रस्थितो भव। तत्र यः अग्रे गमिष्यति, स एव शीघ्रगामी भविष्यति। वचनेन किम्? व्यवहारेण ज्ञास्यसि, कः शीघ्रगामी अस्ति। कूर्मस्य इदं वचनं श्रुत्वा शशकः अतिप्रसन्नः अभवत्। तस्य प्रस्तावं च स्वीकृतवान्।

ततः एकं प्रसिद्धं दूरवर्तिनं पादपं लक्ष्यं कृत्वा कूर्मः शशकश्च सहैव चलितौ। किञ्चिद्दूरं गत्वा शशकस्य मनसि एवम्

अभवत्—"शीघ्रगामी अहं क्षणमात्रेण एव लक्ष्यं प्राप्स्यामि। साम्प्रतं किञ्चित् स्वपिमि।" एवं चिन्तयित्वा शशकः एकस्य सुखदस्य वटवृक्षस्य शाद्वलायां छायायां भूमौ प्रसुप्तः।

कूर्मः मन्दं मन्दं गच्छन् अपि सततं गमने तत्परः आसीत्। एवं स एव प्रथमं लक्ष्यं स्थानं प्राप्तवान्। इतः यदा शशकस्य निद्रा

भग्ना सञ्जाता तदा अपश्यत्--कूर्मः लक्ष्यं स्थानं प्राप्य सुखासीनः वर्तते । अनेन कर्मणा शशकः अतिलज्जितः अभवत् । अनया कथया नीतिद्वयस्य शिक्षा भवति ।

[क] "दीर्घसूत्री विनश्यति ।"

[ख] "मन्दोऽपि सततं परिश्रमेण महत्पदं प्राप्नोति ।"

अतः तीव्रबुद्धिः सत्यपि परिश्रमाभावे छात्रः असफलतां प्राप्नोति मन्दोऽपि निरन्तरं परिश्रमेण श्रेष्ठः भवितुं शक्नोति ।

शिक्षा--"मन्दोऽपि लभते सिद्धिं, सततं यत्नमाचरत् ।"

**अभ्यासः**

1. संस्कृत में उत्तर दो :—
   (क) शशकः कुत्र न्यवसत् ?
   (ख) तस्य केन सह मैत्री अभवत् ?
   (ग) शशकः कूर्मं किम् अकथयत् ?
   (घ) शशकस्य उपहासं श्रुत्वा कूर्मः किम् अकथयत् ?
   (ङ) स्वभावेन कः शीघ्रगामी अस्ति ?
   (च) प्रयत्नेन कः शीघ्रगामी अभवत् ?
   (छ) अनया कथया का शिक्षा भवति ?
2. इस पाठ के द्वितीय अनुच्छेद का अर्थ अपनी मातृभाषा में लिखो ।
3. निम्नलिखित शब्दों का अर्थ लिखकर वाक्यों में प्रयोग करो :—
   सह, प्रकाशम्, श्रुत्वा, शीघ्रगामी, मन्दगामी ।
4. रिक्त स्थानों को भरो :—
   (क) त्वं कुत्र ..........।
   (ख) वयं गृहं ........।
   (ग) .......... पुस्तकं पठन्ति ।
   (घ) शशकः कूर्मम् ..........।
5. निम्नलिखित पदों के धातु, लकार तथा वचन लिखो :—
   निबसति, कथयसि, अभवत्, शक्नोति ।

षष्ठः पाठः

# महामना: पण्डितमदनमोहनमालवीयः

**अचिरादेव, औदार्येण, अयाचत, अहर्निशम्, अभियन्त्रणस्य, विधिशास्त्रस्य, खनिशास्त्रस्य, कारागारम्, ख्रीष्टाब्दे ।**

प्रातःस्मरणीयः महामनाः पं० मदनमोहनमालवीयः तपस्वी, कर्मठः, महान् देशभक्तश्च आसीत् । अयं 1861 तमे ख्रीष्टाब्दे प्रयागे जन्म अलभत । मालवीयमहोदयः बाल्यादेव तीव्रबुद्धिः आसीत् । अतः अचिरादेव पाण्डित्यं प्राप्तवान् । अस्य ओजस्वि-भाषणं श्रुत्वा श्रोतारः मन्त्रमुग्धाः अभवन् । तस्य वाणीप्रवाहः सर्वेषां मनांसि आनन्दयत् । अस्य भाषणेन विपक्षाः सन्तुष्टाः पराजिताश्च अभवन् । प्रतिभया पाण्डित्येन विनम्रतयाः औदार्येण देशभक्त्या च अयम् अद्वितीयः आसीत् ।

अयं सदा विश्वविद्यालयस्य स्थापनार्थं प्रयत्नं कृतवान् । स भिक्षापात्रम् आदाय भिक्षाम् अयाचत । नरेशानां श्रेष्ठिनां निर्धनानाञ्च गृहे विद्यालयस्य कृते अस्य भिक्षावृत्तिः प्रथिता अभवत् ।

इत्थं पञ्चभिः वर्षैः कोटिपरिमितानि रूप्यकाणि संगृहीतवान् । ततः 1918 तमे ख्रीष्टाब्दे अनेन काश्यां हिन्दू-विश्वविद्यालयः स्थापितः । अस्य विश्वविद्यालयस्य विकासाय अहर्निशं प्रयत्नम् अकरोत ।

अस्मिन् विश्वविद्यालये संस्कृतस्य, कलायाः, विज्ञानस्य, अभियन्त्रणस्य, खनिशास्त्रस्य, विधिशास्त्रस्य अन्येषामपि च विविध-विषयाणाम् अध्यापनं भवति । संस्कृतस्य स्वातन्त्र्येण पाठनाय एकः महाविद्यालयः वर्तते । तत्र वेदाः, पुराणानि, धर्मशास्त्राणि, व्याकरणम्, साहित्यम्, ज्यौतिषम् अन्यानि च शास्त्राणि पाठ्यन्ते ।

अस्मिन् विश्वविद्यालये स्व-स्व-विषयेषु प्रख्याताः महान्तः विद्वांसः अध्यापनाय अन्विष्य नियुक्ताः । छात्राणां कृते मालवीयस्य अगाधः स्नेहः आसीत् । अतः अनेन छात्राणां निवासाय अनेकाः भव्याः छात्रावासाः सन्ति । देशभक्त्या स्वतन्त्रतायाः आन्दोलने नायको भूत्वा अयम् अनेकवारम् कारागारं गतवान् । अयं भारतमातुः वरपुत्रः 1946 तमे ख्रीष्टाब्दे कीर्तिशेषः अभवत् ।

सत्यमेव कथ्यते :

शरीरस्य गुणानाञ्च, दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविध्वंसि, कल्पान्तस्थायिनो गुणाः ॥ 1 ॥

न यत्रास्ति गतिर्वायोः रश्मीनाञ्च विवस्वतः ।

तत्रापि प्रविशत्याशुर्बुद्धिः बुद्धिमतां सदा ॥ 2 ॥

## अभ्यासः

1. संस्कृत में उत्तर दो :–
   (क) काशी-विश्वविद्यालयस्य संस्थापकः कः आसीत् ?
   (ख) स केन प्रकारेण धनं संगृहीतवान् ?
   (ग) कस्मिन् ख्रीष्टाब्दे अस्य विश्वविद्यालयस्य स्थापना अभवत् ?
   (घ) मालवीयस्य जन्म कदा अभवत् ?
   (ङ) अस्य कीदृशी प्रतिभा आसीत् ?
2. अपनी मातृभाषा में लिखो कि मालवीयजी के जीवन से क्या शिक्षा मिलती है।
3. आठ पंक्तियों में मालवीयजी के गुणों का वर्णन करो।
4. जीवन की सार्थकता के लिए तुम्हें क्या बनना है :–
   अध्ययनशील, देशभक्त, कर्मठ योद्धा–कारण देते हुए संस्कृत के चार वाक्यों में लिखो।
5. निम्नलिखित शब्दों का अर्थ लिखकर वाक्यों में प्रयोग करो :–
   परित्यज्य, अहर्निशम्, अभियन्त्रणस्य, विधिशास्त्रस्य।
6. निम्नलिखित क्रियाओं में धातु, लकार एवं पुरुष का निर्देश करो :–
   अस्ति, आसीत्, अकथयत्, भवन्ति, अभवत्।
7. इस पाठ के दोनों श्लोकों को कण्ठस्थ करो।

---

सप्तमः पाठः

# ऋतुवर्णनम्

**क्रीडाक्षेत्रम्, किसलयानि, प्रस्फुटन्ति, अन्विष्यति, वपन्ति, कर्दमाः, शुभ्राः, वारि, वान्ति ।**

अस्माकं देशः भारतवर्षम् अस्ति । अयं देशः प्रकृतेः क्रीडाक्षेत्रम् । प्रकृति-परिवर्त्तनेन वर्षस्य द्वादशमासेषु षड् ऋतवः भवन्ति ।

1. वसन्तः, 2. ग्रीष्मः, 3. वर्षा, 4. शरद्, 5. हेमन्तः, 6. शिशिरश्च तेषां नामानि ।

ऋतूनां श्रेष्ठः वसन्तः अस्ति । अतः स ऋतुराज इति कथ्यते । सर्वे कवयः वसन्तं वर्णयन्ति । संस्कृतस्य महाकवेः कालिदासस्य

काव्ये वसन्तस्य शोभा अतीव रमणीया अस्ति। तस्य "ऋतु-संहार" नाम्नि काव्ये षड्-ऋतूनां वर्णनं विद्यते। चैत्रवैशाखयोः वसन्तः इति संज्ञा विद्यते। वसन्तऋतौ पादपेषु लतासु च नूतनानि किसलयानि प्रस्फुटन्ति। आम्रवृक्षेषु मञ्जर्यः जायन्ते। बहुविधानि पुष्पाणि वृक्षेषु लतासु च विकसन्ति। आम्राणाम् उद्यानेषु कोकिलाः कूजन्ति। विकसितेषु कुसुमेषु भ्रमराः गुञ्जन्ति।

ज्येष्ठाषाढयोः ग्रीष्मः ऋतुः भवति। ग्रीष्मे सूर्यः तपति। तस्य तापेन सर्वे पशवः नराश्च व्याकुलाः भवन्ति। मध्याह्ने सर्वे वृक्षस्य छायाम् अन्विष्यन्ति। परन्तु ग्रीष्म-ऋतौ सन्ध्या-समयः परम-रमणीयः भवति।

श्रावणभाद्रमासयोः वर्षा ऋतुः भवति। वर्षासु महती वृष्टिः भवति। नदीनां जलानि मलिनानि भवन्ति। वीथयः कर्दमिताः भवन्ति। अस्मिन् समये कृषकाः क्षेत्राणि कर्षन्ति। कृष्टेषु क्षेत्रेषु बीजानि वपन्ति। वर्षर्तौ कदम्बः कुसुमितः भवति। मयूराश्च नृत्यन्ति।

आश्विनकार्त्तिकमासयोः शरद् ऋतुः भवति। शरदि मेघाः निर्गच्छन्ति। तेन आकाशं स्वच्छं प्रसन्नञ्च दृश्यते। निर्जलाः मेघाः शुभ्राः दृश्यन्ते। नद्यः कर्दमरहिताः शुभ्रजलाश्च सञ्जायन्ते। सारसाः हंसाश्च पंक्तिबद्धाः आकाशे उड्डयन्ते। हरितानि धान्यक्षेत्राणि दृष्ट्वा कृषकाः प्रसीदन्ति।

अग्रहायणपौषयोः हेमन्तः ऋतुः भवति। अस्मिन् समये शैत्यं वर्द्धते। वारि अति शीतलं भवति। हिमपातेन सरस्सु कमलानि नश्यन्ति। दिवसाः संकुचन्ति। पक्वधान्येन क्षेत्राणि पीतानि भवन्ति।

माघफाल्गुनमासयोः शिशिरः ऋतुः भवति। शिशिरे अधिकं शीतं मानवाः अनुभवन्ति। शीतः वातः वाति। वृक्षेभ्यः जीर्णानि पत्राणि पतन्ति। अधुना प्रकृतिः नूतना भवति। सा जीर्णानि पत्रवस्त्राणि परित्यजति।

### अभ्यासः

1. संस्कृत में उत्तर दो :—

(क) कति ऋतवः सन्ति ?

(ख) तेषां नामानि कथय।

(ग) कः ऋतूनां राजा अस्ति ?

2. किन्हीं तीन ऋतुओं का वर्णन अपनी मातृभाषा में लिखो।

3. संस्कृत में अनुवाद करो :–

(क) ऋतुओं का राजा वसन्त है।

(ख) चैत-वैशाख में वसन्त ऋतु होती है।

(ग) किसान खेत जोतते हैं।

(घ) हमलोगों का देश भारतवर्ष है।

4. निम्नलिखित पदों का अर्थ लिखकर उनका वाक्यों में प्रयोग करो :–
अस्माकम्, उद्यानेषु, किसलयानि, वपन्ति।

5. निम्नलिखित शब्दों का विभक्ति-निर्देश करो :–
वृक्षाणाम्, आकाशे, ऋतूनाम्, पत्राणि, वृक्षेभ्यः।

—— ——

अष्टमः पाठः

# सुभाषितानि

## लघुचेतसाम्, वसुधैव, प्रज्ञा, दर्पणः।

विद्या ददाति विनयं, विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति, धनाद्धर्मः ततः सुखम्॥ 1॥

अयं निजः परो वेति, गणना लघुचेतसाम्।
उदारचरितानां तु, वसुधैव कुटुम्बकम्॥ 2॥

यस्य नास्ति स्वयं प्रज्ञा, शास्त्रं तस्य करोति किम्।
लोचनाभ्यां विहीनस्य, दर्पणः किं करिष्यति॥ 3॥

अष्टादशपुराणेषु, व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय, पापाय परपीडनम्॥ 4॥

उद्यमेन हि सिद्ध्यन्ति, कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य, प्रविशन्ति मुखे मृगाः॥ 5॥

### अभ्यासः

1. संस्कृत में उत्तर दो :—
   (क) विद्या किं ददाति ?
   (ख) कस्मात् धनम् आप्नोति ?
   
   (ग) कस्मात् सुखं भवति ?
   (घ) लघुचेतसां गणना कथं भवति ?

(ङ) उदारचरितानां गणना कथं भवति ?
(च) कस्य शास्त्रं निष्फलं भवति ?
(छ) अष्टादशपुराणेषु व्यासस्य किं सारवचनम् ?
(ज) कार्याणि कथं सिद्ध्यन्ति ?

2. इस पाठ के श्लोकों को कण्ठस्थ करो।
3. श्लोक संख्या 2, 3 तथा 5 का अर्थ लिखो।
4. श्लोक संख्या 1 में बताओ कि निम्नलिखित शब्द किस विभक्ति के किस वचन में हैं :—
विनयात्, पात्रताम्, विद्या, सुखम्।
5. निम्नलिखित शब्दों का अर्थ बताओ :—
गणना, प्रज्ञा, वसुधा, लोचनाभ्याम्, पर्दणः, पापाय, परपीडनम्।
6. रिक्त स्थानों की पूर्त्ति करो :—
(क) पात्रत्वात् ········· (ख) लोचनाभ्याम् ········ ।
(ग) पुण्याय ·········· । (घ) पापाय ··········· ।

---

नवमः पाठः

# हस्तिशृगालयोः कथा

हस्ती, प्रेषितवन्तः, निरूपितः, काननराज्ये,
सत्वरम्, निमग्नः, सकाशम् ।

छात्राः—उपाध्याय ! अद्य कथां श्रोतुम् इच्छामः ।

शिक्षकः—यूयं शृणुत । मित्रेषु कश्चित् धूर्त्तः भवति । तेन सह मित्रता न कर्त्तव्या । तत्र लाभस्य का कथा, महती हानिः अपि संभवति । धूर्त्तः प्राणान् अपि हरति ।

छात्राः—उपाध्याय ! कथं मित्रं प्राणान् हरति ? सविस्तरं ज्ञातुमिच्छामः ।

शिक्षकः—शृणुत । पुरा ब्रह्मारण्ये कर्पूरतिलको नाम विशालकायः हस्ती आसीत् । तं दृष्ट्वा सर्वे शृगालाः अचिन्तयन् । एतस्य देहेन अस्माकं मांस-चतुष्टयस्य भोजनं भविष्यति । परम् अस्य मरणं कठिनमस्ति । तत्र एकः वृद्धः शृगालः कथयति—अहम् उपायेन एनं हनिष्यामि ।

छात्राः—ततः किं कृतं वृद्धशृगालेन ?

शिक्षकः—एकस्मिन् दिने स धूर्त्तः वृद्धः शृगालः गज-समीपं गत्वा साष्टांगं प्रणमति कथयति च—"प्रभो ! कृपां कुरु ।" हस्तीः पृच्छति—"कस्त्वम् ? कथमत्र आगतः ?" सोऽवदत्—वनवासिनां प्रतिनिधिः जम्बुकः अहम् । सर्वे पशवः मां भवतः सकाशं प्रेषितवन्तः । तेषु चिन्ता अस्ति यत् राजानं विना वने अवस्थातुं न युक्तम् । भवानेव सर्व-स्वामिगुणोपेतः निरूपितः । तदत्र काननराज्ये भवन्तम् अभिषेक्तुम् इच्छन्ति । राजतिलकस्य लग्नवेला शीघ्रं विद्यते । सत्वरं मया सह चलतु भवान्, येन अद्यैव राजा भविष्यति ।

छात्राः—उपाध्याय ! किं स वृद्धः शृगालः लोभं दर्शयित्वा गजं वशीकर्त्तुमिच्छति ?

शिक्षकः—सः अतिधूर्त्तः । अनेन प्रकारेण तं गजं हनिष्यति ।

छात्राः—ततः किम् अभवत् ?

शिक्षकः—शृणुत । एवं कथयित्वा स धूर्त्तः तत् स्थानात् शीघ्रं प्रचलितः ।

छात्रा:—ततः हस्तिना किं कृतम् ?

शिक्षक:—राज्यलोभाकृष्टः गजः शृगालस्य अनुगमनम् अकरोत् । गजस्य दुर्बलतां ज्ञात्वा शृगालः पंकिलेन मार्गेण गमनपरः अभवत् । इत्थं धावन् स विशालकायः हस्ती महापङ्के निमग्नः । ततः स शृगालं कथयति—"मित्र ! महापङ्के निमग्नोऽस्मि । मां रक्ष, उद्धारस्य च उपायं कुरु ।" गजस्य दशां दृष्ट्वा शृगालः विहस्य व्यंग्यभावेन अवदत्—"मम पुच्छं धृत्वा उत्तिष्ठ । अहम् अन्यत् किं करोमि ?"

छात्राः—उपाध्याय ! आश्चर्य-प्रदा अस्य शृगालस्य धूर्त्तता अस्ति । ततः किं कृतं हस्तिना ?

शिक्षक:—छात्रा: ! ज्ञानस्य विषयं शृणुत । धूर्त्तः स्वकार्य-साधने पादौ पतति, मधुरं वदति, स्वत्वं च प्रदर्शयति । सम्पन्ने कार्ये स एव निर्दय: भवति । निष्कपट: हस्ती धूर्त्त-शृगालस्य कपटं न जानाति स्म । अधुना शृगालस्य व्यंग्यवचनं श्रुत्वा निजम् अविवेकं ज्ञात्वा चिन्तामग्न: सञ्जात: । निर्दय: शृगाल: गजं त्यक्त्वा पलायित: । न किमपि उपायं दृष्ट्वा गज: व्याकुलीभूत: मृतश्च ।

सर्वे शृगाला: तत्रागत्य यथेच्छं गजस्य मांसं खादन्ति वृद्ध-शृगालस्य धूर्त्ततां च प्रशंसन्ति । अत: कदापि धूर्त्ते विश्वासो न कर्त्तव्य: । निज-विवेकेन कार्यं कर्त्तव्यम् ।

शिक्षा—"लोभात् क्रोध: प्रभवति, लोभात् काम: प्रजायते ।
लोभात् मोहश्च नाशश्च, लोभ: पापस्य कारणम् ।।

### अभ्यास:

1. संस्कृत में उत्तर दो :—

(क) छात्रा: शिक्षकं किम् अपृच्छन् ?

(ख) धूर्त्तेन सह मित्रतया किं भवति ?

(ग) धूर्त्त: किं हरति ?

(घ) वृद्धशृगाल: किम् अकथयत् ?

(ङ) धूर्त्त: शृगाल: केन प्रकारेण गजं हतवान् ?

2. इस कहानी को अपनी मातृभाषा में लिखो।

3. बताओ कि निम्नलिखित शब्द किस विभक्ति के किस वचन में हैं :—



ज्ञानाय, एतस्य, देहेन, प्राणान्, पशव:, भवान्, सम्पन्ने ।

4. निम्नलिखित शब्दों के स्त्रीलिंग रूप द्वितीय स्तम्भ में लिखो :-

शृगालः ...........

जम्बुकः ...........

आचार्यः ...........

छात्रः ...........

वृद्धः ...........

5. निम्नलिखित धातुओं के रूप लङ् लकार तथा लृट् लकार के प्रथम पुरुष तथा उत्तम पुरुष के तीनों वचनों में लिखो :-

हृ, प्रच्छ्, कथ्, चल् ।

6. निम्नलिखित शब्दों का अर्थ लिखकर वाक्यों में प्रयोग करो :-

एतस्य, तस्य, अस्य, यस्य, कस्य, तव, मम ।

7. इस पाठ के अन्तिम अनुच्छेद का अपनी मातृभाषा में अनुवाद करो ।

8. इस पाठ के अन्तिम श्लोक को कण्ठस्थ कर उसका अर्थ लिखो ।

---

दशमः पाठः

# मित्रयोः वार्त्तालापः

समक्षे, श्रोतुम्, अम्बा, कुत्रापि, अग्रजः, सूक्तिम्, साधुवादाः ।

गणेशः—गुरो ! अद्य भवतः समक्षे आवां संस्कृते वक्तुम् इच्छावः ।

गुरुः—साधु, गणेश । अहम् अपि युवयोः संस्कृतवार्त्तां श्रोतुम् इच्छामि ।

गणेशः—मित्र महेश ! अत्र आगच्छ । अहं त्वया सह वार्त्तालापं करोमि । अधुना मया सह संस्कृतं वद ।

महेशः—मित्र ! नमस्काराः । स्वपरिवारस्य कुशलं कथय । कुशलिनौ पितरौ ?

गणेशः—मित्र ! प्रणामाः । ईश्वरस्य कृपया कुशली पिता, कुशलिनी च अम्बा ।

महेशः—त्वं साम्प्रतं कस्मिन् वर्गे पठसि ?

गणेशः—अहं षष्ठ-वर्गे पठामि ।

महेशः—मित्र ! तुभ्यं संस्कृतं रोचते ?

गणेशः—अतीव रोचते मे संस्कृतम् । मित्र ! कथं पुनः इदं पृच्छसि?

महेशः—मित्र ! संस्कृतं पठित्वा किं ज्ञास्यसि ?

गणेशः—मित्र ! यः भारते जन्म लब्ध्वा संस्कृतं न जानाति, स मातृभूमिम् अपि न जानाति । अस्माकं सर्वे संस्काराः संस्कृतभाषया भवन्ति ।

महेशः—मित्र ! संस्कृतं विना अस्माकं कश्चिदपि संस्कारः न भवति । अतः त्वं यथार्थं वदसि । परं संस्कृतं कठिनम् इति कथयन्ति जनाः ।

गणेशः—अत्र किं काठिन्यमस्ति ? बिहारे लोकभाषाः प्रचलन्ति । सर्वत्र संस्कृतस्य बहवः शब्दाः सन्ति । बालकाः जन्मनः प्रभृति अनायासेन संस्कृतस्य शब्दान् जानन्ति । तथापि त्वं कठिनं वदसि ?

महेशः—मित्र ! तदा परिश्रमेण संस्कृतभाषा पठनीया । ज्ञानस्य धर्मस्य माधुर्यस्य च बोधने श्रेष्ठतमा इयं भाषा । मम अग्रजः व्यवहारकाले सर्वदा संस्कृत-सूक्ति वदति । अतः सर्वे लोकाः मम भ्रातरं प्रशंसन्ति ।

गणेशः—मित्र ! व्यासस्य वाल्मीकेः अश्वघोषस्य कालिदासस्य च संस्कृतं सुन्दरम् मधुरम् अकठिनं च भवति । येषां भाषामाधुर्यमास्वाद्य सर्वे मन्त्रमुग्धाः भवन्ति ।

गुरुः—साधुवादाः । मम वचनं शृणुतम्—"विद्यालयं समागत्य संस्कृते भाषणं कुरू ।"

## अभ्यासः

1. निम्नलिखित शब्दों का अर्थ लिखो :—
   भवतः, आवाम्, वार्त्ताम्, अम्बा, रोचते, आंग्लभाषा ।
2. संस्कृत में उत्तर दो :—
   (क) त्वं कस्मिन् वर्गे पठसि ?
   (ख) संस्कृतं पठित्वा किं ज्ञास्यसि ?
   (ग) कालिदासः कः आसीत् ?
3. संस्कृत भाषा हमारे लिए क्यों आवश्यक है ? अपना विचार लिखो ।
4. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :—
   इच्छामि, कुशली, पृच्छसि, जानामि, अस्माकम्, वदति, अनृत्यत् ।

5. रिक्त स्थानों की पूर्त्ति करो :–

(क) ······· वदन्ति ।

(ख) कालिदासः ········।

(ग) मम अग्रजः ········ वदति ।

(घ) ····· कुशलिनी ······।

(ङ) ····· जनाः ······।

———

एकादशः पाठः

# प्रातः कालः

**उदेति, अहोरात्रम्, अपसरति, प्रसरति, खगाः, नीडान्, विधाय, रञ्जितम्, ब्रह्ममुहूर्त्ते ।**

इदं सुप्रभातम् । आकाशे सूर्यः उदेति । एष भगवान् आकाशमण्डलस्य मणिः । अयमेव अहोरात्रं जनयति । इदानीं अन्धकारः शनैः शनैः अपसरति । प्रातः काले पूर्वस्याम् अरुणः प्रकाशः प्रसरति । शीतलः पवनः मन्दं मन्दं वाति । सूर्यस्य किरणैः कमलानि विकसन्ति । वृक्षशाखासु खगाः कूजन्ति । खगाः

नीडान् परित्यज्य आहारार्थं गच्छन्ति। सर्वे जीवाः निद्रां त्यजन्ति।

कृषकाः स्कन्धे हलं निधाय क्षेत्रं प्रति गच्छन्ति। सूर्यस्य किरणैः रञ्जितं नदीजलं शोभते। प्रभातपवनेन लताः कम्पन्ते। प्रातः भ्रमणेन मनः प्रसन्नं स्वस्थञ्च भवति।

ब्रह्मचारिणः ब्रह्ममुहूर्त्ते उत्थाय पठन्ति, ईश्वरस्य स्तुतिं च कुर्वन्ति। ते शौचादि कार्यं समाप्य नद्यां स्नानाय यान्ति। प्रातः स्नानेन शरीरं निर्मलं भवति चित्तं च प्रसीदति। अलसाः छात्राः प्रातः काले अपि स्वपन्ति।

प्रातः शयनेन स्वास्थ्यस्य महती हानिः भवति। तस्मात् प्रातः काले कदापि न शयनीयम्।

अस्मिन् ब्रह्ममुहूर्त्ते संगीतज्ञाः संगीतम् गायन्ति एवं छात्राः विद्याभ्यासं कुर्वन्ति। कृषकाः कृषेः प्रबन्धं चिन्तयन्ति। तपस्विनः तपः तपन्ति। ब्रह्ममुहूर्त्ते पाठाभ्यासेन पाठस्य स्मृतिः सुस्थिरा भवति, बुद्धिः वर्द्धते, विद्या च प्रकाशते। "अहो सुप्रभातस्य महत्त्वम्!"

### अभ्यासः

1. निम्नलिखित शब्दों का अर्थ लिखो :–
   अहोरात्रम्, शनैः शनैः, अपसरति, अरुणः, प्रकाशः, खगाः, ब्रह्ममुहूर्त्तम्, ब्रह्मचारी।
2. संस्कृत में उत्तर दो :–
   (क) सूर्यः कुत्र उदेति ?
   (ख) प्रातः काले खगाः कुत्र गच्छन्ति ?
   (ग) प्रातः काले कृषकाः कुत्र गच्छन्ति ?
   (घ) ब्रह्मचारिणः कदा पठन्ति ?
   (ङ) प्रातः शयनेन किं भवति ?

3. अन्तिम अनुच्छेद का अर्थ अपनी मातृभाषा में लिखो।

4. कोष्ठ से उपयुक्त शब्द चुनकर रिक्त स्थानों की पूर्त्ति करो :–

(क) सूर्यस्य किरणैः ............ प्रस्फुटन्ति।

[पुष्पाणि, कमलानि]

(ख) वृक्षशाखासु ............ कूजन्ति।

[वानराः, काकाः, खगाः]

(ग) प्रातः काले कृषकाः स्कन्धे हलं निधाय ...... गच्छन्ति।

[गृहम्, आपणं, क्षेत्रम्]

(घ) ब्रह्मचारिणः ............ पठन्ति।

[सायंकाले, मध्याह्ने, ब्रह्ममुहूर्त्ते]

(ङ) अलसाः छात्राः ......... स्वपन्ति।

[सायंकाले, रात्रौ, मध्याह्ने, प्रातःकाले]

5. संस्कृत में अनुवाद करो :–

(क) सूर्य ही दिन-रात बनाता है।
(ख) धीरे-धीरे अन्धकार हटता है।
(ग) सभी जीव नींद त्यागते हैं।
(घ) छात्र प्रातःकाल पढ़ते हैं।
(ङ) छात्र विद्या का अभ्यास करते हैं।

---

द्वादशः पाठः

# नीतिश्लोकाः

**प्रदानेन, वक्तव्यम्, पुस्तकस्था, परदारेषु, सर्वभूतेषु, तमः।**

प्रियवाक्यप्रदानेन, सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तदेव वक्तव्यं, वचने का दरिद्रता ॥ 1 ॥

पुस्तकस्था तु या विद्या, परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने, न सा विद्या न तद्धनम् ॥ 2 ॥

मातृवत् परदारेषु, परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु, यः पश्यति स पण्डितः ॥ 3 ॥

अधमाः धनमिच्छन्ति, धनं मानं च मध्यमाः ।
उत्तमाः मानमिच्छन्ति, मानो हि महतां धनम् ॥ 4 ॥

वरमेको गुणी पुत्रो, न च मूर्खाः शतान्यपि ।
एकश्चन्द्रः तमो हन्तिः, न च ताराः सहस्रशः ॥ 5 ॥

रक्षणीयं सदा सत्यं, प्राणैः कण्ठगतैरपि ।
न हि सत्याद् विहीनस्य, प्रतिष्ठा क्वापि जायते ॥ 6 ॥

**अभ्यासः**

1. संस्कृत में उत्तर दो :–
   (क) जन्तवः कथं तुष्यन्ति ?
   (ख) कार्यकाले समुत्पन्ने का विद्या सफला न भवति ?

(ग) कः पण्डितः ?

(घ) महतां किं धनम् ?

(ङ) कः पुत्रः वरं भवति ?

(च) सत्यविहीनस्य का गतिः भवति ?

2. इस पाठ में दिए गए श्लोकों को कण्ठस्थ करो।

3. श्लोक संख्या 1, 2, 5 और 6 का भावार्थ अपनी मातृभाषा में लिखो।

4. रिक्त स्थानों को भरो :—

(क) प्रियवाक्यप्रदानेन ········।

(ख) ········· न सा विद्या।

(ग) ········ न तद् धनम्।

(घ) ········ स पण्डितः।

(ङ) न हि सत्याद् विहीनस्य ······।

5. निम्नलिखित वाक्यों का संस्कृत में अनुवाद करो :—

(क) सत्य से प्रतिष्ठा होती है।

(ख) पुस्तक में रहने वाली विद्या सफल नहीं होती है।

(ग) उत्तम लोग मान चाहते हैं।

(घ) नीच लोग धन चाहते हैं।

(ङ) पण्डित अपनी आतमा की भाँति सभी को देखते हैं।

6. निम्नलिखित वाक्य-खण्डों के लिए एक-एक शब्द लिखो :—

(क) माता की भाँति ·····।

(ख) आत्मा की भाँति ·····।

(ग) पुस्तक में रहने वाली विद्या ·····।

(घ) दूसरे के हाथ में गया हुआ ·····।

(ङ) कण्ठ तक आ जाने पर भी ····।

---

त्रयोदशः पाठः

# डा० राजेन्द्रप्रसादः

उन्नायकः, उद्धारकः, चित्रगुप्तवंशे,
विधिव्यवसायः, पाषाणमयी ।

देशरत्नः डा० राजेन्द्रप्रसादः स्वतंत्रभारतस्य प्रथमः राष्ट्रपतिः अभवत् । स भारतीयसंस्कृतेः उन्नायकः, हिन्दीसाहित्यस्य उद्धारकः, संस्कृतसाहित्यस्य प्रचारकः च आसीत् । देशसेवायै दीनानां रक्षायै च अनेकवारं स कारागारम् अगच्छत् । स्वकर्मणा स बिहारस्य सर्वश्रेष्ठः पुरुषः अभवत् ।

स छपरा-मण्डलान्तर्गते "जीरादेई" नाम के ग्रामे चित्रगुप्तवंशे 1884 तमे ख्रीष्टाब्दे जातः। अस्य पिता मुंशी महादेवसहायः आसीत्। स अतिप्रतिष्ठितः विद्वान् च अभवत्। बाल्याद् एव डा० प्रसादः सुशीलः मातृपितृभक्तः तीव्रबुद्धिश्च आसीत्।

स स्वभावेन विनयशीलः परदुःखकातरः उदारवृत्तश्च आसीत्। अस्य महानुभावस्य शिक्षारम्भः उर्दूफारसी भाषायां एव अभवत्। स जटिलान् अपि त्रिषयान् बाल्यादेव बोद्धुं क्षमः आसीत्। अतः सर्वासु परीक्षासु प्रथमः जातः।

कालिकतायाः प्रेसिडेन्सी महाविद्यालयात् स एम० ए० उपाधिं प्राप्तवान्, मुजफ्फरपुरे च प्राध्यापकः अभवत्। स अध्यापनकार्यं त्यक्त्वा पाटलिपुत्रस्य उच्च-न्यायालये अधिवक्ता भूत्वा आगतवान्। विधि व्यवसाये अपि स्वप्रतिभाया परिश्रमेण च स विख्यातः अभवत्।

स कुशलवक्ता यशस्वी लेखकः दीनबंधुश्च अभवत्। गान्धी-महोदयस्य प्रभावेण स न्यायालयवृत्तिं त्यक्त्वा असहयोग-आन्दोलने संलग्नः। भारतस्य स्वतन्त्रता-लाभं यावत् स आन्दोलने लग्नः आसीत्। कारागारे च स बहूनि दुःखानि असहत, यानि पुस्तके वर्णितानि सन्ति। क्रमशः स न केवलं बिहारस्य अपितु समस्तस्य भारतस्य नेता च अभवत्। स महान् विद्वान् लेखकश्च आसीत्। स बहूनि ग्रन्थानि अलिखत्। देशवासिनः स्वकृतज्ञतां प्रकटयितुं पाटलिपुत्रे नगरखण्डस्य "राजेन्द्रनगरम्" इति भागस्य नाम कृतवन्तः। तस्य पत्नी "राजवंशी" नाम्ना विख्याता आसीत्। सा पतिव्रता डा० राजेन्द्रप्रसादस्य कार्ये सहायिका च अभवत्।

बिहारस्य राज्यपालभवनं पुरतः अस्य दिव्या पाषाणमयी भव्या प्रतिमा शोभते। राजमार्गश्च तस्य नाम्ना देशरत्न-मार्गः इति कथ्यते।

स महापुरुषः 1963 तमे ख्रीष्टाब्दे दिवंगतः। किन्तु अद्यापि तस्य नाम सर्वेषां भारतीयानां मनीस वर्तते।

### अभ्यासः

1. संस्कृत में उत्तर दो :—
   (क) स्वतंत्रभारतस्य प्रथमः राष्ट्रपतिः कः आसीत् ?
   (ख) डा० राजेन्द्रप्रसादस्य जन्म कुत्र अभवत् ?
   (ग) अस्य पिता कः आसीत् ?
   (घ) अस्य प्रारम्भिकी शिक्षा कस्यां भाषायां अभवत् ?
2. अपनी मातृभाषा में लिखो कि देशरत्न डा० राजेन्द्र प्रसाद की जीवनी से तुम्हें क्या शिक्षा मिलती है।
3. निम्नलिखित शब्दों का विभक्ति-निर्देश करो :—
   भारतस्य, बाल्यात्, कस्मिन्, विषयान्, प्रभावेण।
4. निम्नलिखित शब्दों का अर्थ लिखो :—
   अत्रापि, उदारवृत्तश्च, त्यक्त्वा।
5. संस्कृत में अनुवाद करो :—
   (क) डा० राजेन्द्र प्रसाद स्वतंत्र भारत के प्रथम राष्ट्रपति थे।
   (ख) वे माता-पिता के भक्त थे।
   (ग) वे सभी परीक्षाओं में प्रथम हुए।
   (घ) आज भी पटने में राजेन्द्रनगर है।
   (ङ) वे मुजफ्फरपुर में प्राध्यापक हुए।

---

चतुर्दशः पाठः

# गणेशस्य प्रत्युत्पन्नमतित्वम्

**कोलाहलम्, मध्यस्थम्, मनसि, आरुह्य, अवलोकयन्ति ।**

देवेषु कः प्रथमः पूज्यः इति देवसभायां विवादस्य विषयः आसीत् । सर्वे देवाः कोलाहलं कुर्वन्ति—"अहं प्रथमः पूज्यः । अहं प्रथमः पूज्यः ।" तत्र निर्णयस्य न कश्चित् मार्गः आसीत् । तदा सर्वे देवाः विष्णुं मध्यस्थं मत्वा विष्णुलोकम् अगच्छन् । देवानां निश्चयः आसीत्—"भगवान् विष्णुः यं श्रेष्ठं घोषयिष्यति तस्य एव पूजा अग्रे भविष्यति ।"

देवानां विवादविषयं श्रुत्वा विष्णुः अवदत्—"यः स्वल्पतमेन कालेन वारत्रयं पृथिव्याः प्रदक्षिणां करिष्यति तस्य देवस्य अग्रे पूजा भविष्यति । इदं वचनं श्रुत्वा सर्वे देवाः सत्वरं निर्गताः । मयूरवाहनः कार्त्तिकेयः पृथिवीं परितः भ्रमति । एवं सर्वे देवाः स्वं स्वं वाहनम् आरुह्य प्रसन्नमनसः परिभ्रमन्ति ।

इदं दृश्यं दृष्ट्वा मूषिकवाहनः गणेशः चिन्तामग्नः अभवत् । स मातापित्रोः भक्तः आसीत् । भक्तेः प्रभावात् तस्य मनसि सहसा एकः विचारः आयाति । स सत्वरं मूषिकम् आरुह्य कैलास-शिखरम् आगतः । तत्र साम्बशिवस्य वारत्रयम् प्रदक्षिणाम् अकरोत् । अल्पादेव कालात् परं विष्णोः समीपम् उपस्थितवान् । ततः मयूरवाहनः कार्त्तिकेयः आगच्छति । एवं क्रमेण सर्वे देवाः

उपस्थिताः अभवन्। तदैव भगवान् विष्णुः निर्णयस्य घोषणाम् अकरोत्––"गणेशस्य एव पूजा अग्रे भविष्यति।" यतः अयमेव स्वल्पतमेन कालेन प्रदक्षिणां कृत्वा समागतः। इमं निर्णयं श्रुत्वा अन्ये देवाः परस्परं मुखम् अवलोकयन्ति। तेषु एकः वदति–– "चित्रम्, महच्चित्रम् एतत्! मूषिकवाहनः गणेशः परिक्रमायां सर्वान् देवान् पराजितवान्।" देवानां मनोगतं भावं ज्ञात्वा विष्णुः अवदत्––भो भो देवाः! शृणुत––"गणेशः पितुः मातुश्च प्रदक्षिणां कृतवान्। तत्र माता साक्षात् पृथिव्याः मूर्त्तिः। तस्याः प्रदक्षिणाभिः तदेव फलं लभ्यते यत्फलं पृथिव्याः प्रदक्षिणाभिः, तस्मात् "अद्य प्रभृति यज्ञपूजनादिषु गणेशस्य एव अग्रे पूजा भविष्यति।"

ततः भगवान् विष्णुः मोदकैः परिपूर्णम् पात्रं पारितोषिक-रूपेण गणेशस्य निकटे प्रेषितवान्। तत् पात्रं विष्णुलोकात् कैलासे आगतम्। अतः मोदकप्रियः गणेशः इति श्रूयते। सर्वे देवाः प्रशंसन्ति कथयन्ति च––"अहो गणेशस्य प्रत्युत्पन्नमतित्वम्।"

### अभ्यासः

1. संस्कृत में उत्तर दो :–
   (क) देवसभायां विवादस्य कः विषयः आसीत्?
   (ख) भगवान् विष्णुः किम् अवदत्?
   (ग) मूषिकवाहनः गणेशः किम् अकरोत्?
   (घ) देवेषु एकः देवः किम् अकथयत्?
   (ङ) भगवान् विष्णुः कां घोषणाम् अकरोत्?
2. गणेश के प्रत्युत्पन्नमतित्व को अपनी मातृभाषा में लिखो।
3. संस्कृत में वाक्य बनाओ :–
   देवसभायाम्, भविष्यति, आरुह्य, गणेशस्य, श्रुत्वा।

4. नीचे कुछ क्रियाएँ दी गई हैं। प्रथम स्तम्भ में धातु का नाम, द्वितीय में लकार तथा तृतीय में पुरुष एवं वचन लिखो :—
भ्रमन्ति, आगच्छति, अकरोत्, अभवत्, अवदत्।

| | | |
|---|---|---|
| | | |

5. संस्कृत में अनुवाद करो :—
(क) गणेश की पूजा पहले होती है।
(ख) विष्णु को मध्यस्थ मानकर वहाँ गए।
(ग) आश्चर्य है, बड़ा आश्चर्य है यह !
(घ) मयूर पर चढ़कर कार्त्तिकेय जाते हैं।
(ङ) गणेश मोदकप्रिय हैं।

---

पञ्चदशः पाठः

# सूक्तयः

**वज्रादपि, मृदूनि, कुसुमादपि, निरस्तपादपे, एरण्डः, द्रुमायते, प्रदीप्ते, वह्निना, प्रक्षालनाद्धि, वाग्मिता, रिक्तः, कल्पलतेव ।**

वज्रादपि कठोराणि, मृदूनि कुसुमादपि । 1 ।

निरस्त-पादपे देशे, एरण्डोऽपि द्रुमायते । 2 ।

विचलति नहि धीरः, सत्यमार्गात् कदाचित् । 3 ।

न कूप-खननं युक्तं, प्रदीप्ते वह्निना गृहे । 4 ।

अवश्यं भाविनो भावा, भवन्ति महतामपि । 5 ।

प्रक्षालनाद्धि पंकस्य, दूरादस्पर्शनं वरम् । 6 ।

हितं मनोहारि वचो हि वाग्मिता । 7 ।

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय । 8 ।

किं किं न साधयति कल्पलतेव विद्या । 9 ।

हितं मनोहारि च दुर्लभं वचः । 10 ।

## अभ्यासः

1. संस्कृत में उत्तर दो :—
   (क) एरण्डः कुत्र द्रुमायते ?
   (ख) सत्यमार्गात् कः न विचलति ?
   (ग) कदा कूप-खननं युक्तं न भवति ?
   (घ) का वाग्मिता अस्ति ?
   (ङ) कः लघुः भवति ?
   (च) किं वचः दुर्लभं भवति ?
2. इस पाठ की सूक्तियों को कण्ठस्थ करो।
3. नीचे लिखे वाक्यों का संस्कृत में अनुवाद करो :—
   (क) वह वज्र से भी कठोर और फूल से भी कोमल है।
   (ख) धीर पुरुष सत्य के रास्ते से कभी विचलित नहीं होते हैं।
   (ग) हितकर और मनोहर वचन ही वाग्मिता है !
   (घ) कल्पलता के समान विद्या क्या-क्या नहीं देती है।
   (ङ) आग लगे घर में कूप खोदना व्यर्थ है।
   (च) भावी महापुरुषों के जीवन में भी अवश्य ही घटती है।
4. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :—
   द्रुमायते, वह्निना, पंकस्य, दूरात्, भवन्ति।
5. रिक्त स्थानों को भरो :—
   (क) ····· सत्यमार्गात्।
   (ख) प्रदीप्ते वह्निना गृहे ·····।
   (ग) कल्पलतेव विद्या ·····।
   (घ) ····· अस्पर्शनं वरम्।
6. किन्हीं पाँच सूक्तियों का वाक्यों में प्रयोग करो।

षोडशः पाठः

# महर्षिः अगस्त्यः

घटात्, बहिः, बहुशः, अवरुद्धम्, अवनतम्, मित्रावरुणयोः, अपातयत्।

महर्षेः अगस्त्यस्य महिमा पुराणेषु बहुशः कथ्यते। ऋग्वेदे वर्णितम् अस्ति यत् स मित्रावरुणयोः पुत्रः आसीत्। इदं च श्रूयते यत् अगस्त्यः घटात् उत्पन्नः।

एकदा विन्ध्यपर्वतः अत्युन्नतो भूत्वा सूर्यस्य मार्गम् अवरुद्धं करोति स्म। तं पर्वतं मुनिः अगस्त्यः अवनतं कृतवान्। एकदा इन्द्रस्य युद्धं "कालेय" नामकैः दानवैः सह अभवत्। तत्र युद्धे

दधीचिः मुनिः इन्द्रस्य सहायताम् अकरोत् । दानवाः अगस्त्यस्य आश्रमं नाशितवन्तः । अगस्त्यस्य पत्नी लोपामुद्रा आसीत् । स दक्षिणस्यां दिशि निवसति स्म ।

रामायणे वर्णितं यत् वने भ्रमन् राघवः सीतया लक्ष्मणेन च सह अगस्त्यम् अपश्यत्, अगस्त्यः च आतिथ्येन तान् पूजयति स्म । स रामाय एकं धनुः अददात्, येन रामः रावणं हतवान् । वनात् निवृत्तेन रामेण सह स अयोध्याम् अगच्छत् ।

एकदा स्वर्गस्य आधिपत्येन "नहुषः" उद्धतः अभवत् । अगस्त्यः हुङ्कारेण तं स्वर्गात् अपातयत्, सर्परूपं च कृतवान् । पुनः शरणागतं तं स्वेन रूपेण अयोजयत् ।

असौ अगस्त्यः कारुणिकः जनानां हितकर्त्ता च आसीत् । स धनुर्वेदे परमनिपुणः आसीत् । दक्षिणस्यां दिशि निवासिनाम् आर्याणां स प्रधानः नेता अभवत् ।

**अभ्यासः**

1. संस्कृत में उत्तर दो :—
   (क) अगस्त्यस्य पिता कः आसीत् ?
   (ख) अगस्त्यस्य पत्नी का आसीत् ?
   (ग) अस्य महर्षेः महिमा कुत्र श्रूयते ?
   (घ) विन्ध्यपर्वतं कः अवनतं कृतवान् ?
   (ङ) अगस्त्यः कुत्र निवसति स्म ?
   (च) रामाय कः धनुः अददात् ?
2. अगस्त्य की महिमा अपनी मातृभाषा में लिखो ।
3. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :—
   पुराणेषु, अवनतम्, दानवैः सह, कृतवान् ।

4. निम्नलिखित शब्दों का विभक्ति-निर्देश करो :—
सहायताम्, घटात्, दक्षिणस्याम्, आतिथ्येन, आर्याणाम् ।

5. संस्कृत में अनुवाद करो :—
(क) ऋग्वेद में अगस्त्य का वर्णन है ।
(ख) अगस्त्य घड़े से उत्पन्न हुए ।
(ग) विन्ध्याचल पहाड़ को अगस्त्य ने झुकाया ।
(घ) अगस्त्य आर्यों के प्रधान नेता हुए ।
(ङ) वे राम के साथ अयोध्या गए ।

6. इस पाठ के अन्तिम अनुच्छेद का अर्थ अपनी मातृभाषा में लिखो ।

7. रिक्त स्थानों की पूर्त्ति करो :—
(क) पुराणेषु ······ श्रूयते ।
(ख) अगस्त्यः ······ उत्पन्नः अभवत् ।
(ग) आर्याणां ······ अभवत् ।
(घ) अगस्त्यस्य पत्नी ······ आसीत् ।
(ङ) विन्ध्यं ······ कृतवान् ।

———

सप्तदशः पाठः

# धूर्तवानरस्य न्यायः

**मार्जारौ, कलहः, स्थापयति, तुलायाम्, तुलाकोटिम्, स्तुवन्तु, धीराः, वञ्चयति ।**

पुत्रः—पितः ! कथय एकां कथाम् ।

पिता—शृणु पुत्र !

कुत्रचिद् ग्रामे द्वौ मार्जारौ आस्ताम् । तौ एकस्मिन् गृहे अपूपं प्राप्नुताम् । अपूपस्य विभाजनकाले तयोः कलहः अजायत ।

एकः वदति—"अहम् अधिकं भागं ग्रहीष्यामि ।"

अपरः वदति—"अहम् अधिकं भागं ग्रहीष्यामि ।"

पुत्रः—ततः किम् अभवत् ?

पिता—एवं स्थिते तौ न्यायार्थम् एकस्य वानरस्य समीपे अगच्छताम् । स वानरः आम्रपादपात् अवतीर्य विवादस्य कारणम् अपृच्छत् । ततः स एकां तुलाम् आनयत् । ताम् आदाय अपूपस्य समं भागं कर्त्तुम् अपूपं द्विधा खण्डितवान् । स वानरः तुलायां तौ खण्डौ निहितवान् । ततः स तुलाकोटिं पश्यति । यत् खण्डं अधिकं पश्यति तस्मात् खण्डात् किमपि अंशम् आदाय खादति । एवं द्विः त्रिः च करोति । एवं कृते तुलायाः अपरः भागः अवनमति । स वानरः क्रमशः सकलम् अपूपम अखादत् । तौ मार्जारौ वानरस्य धूर्त्तताम् अवलोक्य उदासीनौ भूत्वा स्व-स्व-गृहम् अगच्छताम् ।

पुत्रः—पितः, कीदृग् न्यायी आसीत् वानरः ?

पिता—अनया कथया का शिक्षा मिलति ?

पुत्रः—यत्र द्वयोः मूर्खयोः कलहो भवति, तत्र धूर्त्तस्य लाभः भवति । तस्मात् धूर्त्तसंगतिः कदापि न कर्त्तव्या ।

पिता—साधु ! यथार्थतः न्यायी कदापि लोकान् न वञ्चयति । यथा—

अद्यैव वा मरणमस्तु युगान्तरे वा,
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ 1 ॥



—भर्तृहरिः

## अभ्यासः

1. संस्कृत में उत्तर दो :—
   (क) पुत्रः पितरं किम् अकथयत् ?
   (ख) मार्जारयोर्मध्ये कथं विवादः अभवत् ?
   (ग) तयोः विवादस्य विषयः कः आसीत् ?
   (घ) तौ निर्णयार्थं कुत्र अगच्छताम् ?
   (ङ) धूर्त्तः वानरः कथं न्यायं कर्त्तुं प्रवृत्तः ?
   (च) अनया कथया का शिक्षा मिलति ?
2. निम्नलिखित शब्दों से संस्कृत में वाक्य बनाओ :—
   एकदा, तुलायाम्, अपरः, अवतीर्य, अखादत् ।
3. निम्नलिखित वाक्यों का संस्कृत में अनुवाद करो :—
   (क) पुस्तक बाँटने के समय दो मित्रों में झगड़ा हुआ ।
   (ख) मैं अधिक भाग लूँगा ।
   (ग) वे दोनों एक बानर के पास गए ।
   (घ) इसलिए झगड़ा कभी नहीं करना चाहिए ।
4. इस पाठ के अन्तिम श्लोक को कण्ठस्थ करो ।
5. इस कहानी को अपनी मातृभाषा में लिखो । इससे तुम्हें क्या शिक्षा मिलती है ?
6. प्रथम स्तम्भ के वाक्य-खण्डों को द्वितीय स्तम्भ के वाक्य-खण्डों से इस प्रकार मिलाओ कि पूर्ण वाक्य वन जाय :—

| | |
|---|---|
| (क) तौ मार्जारौ | (क) अवनमति । |
| (ख) वानरः पादपात् अवतीर्य | (ख) कदापि न कर्त्तव्यः । |
| (ग) तस्मात् कलहः | (ग) विवाद-विषयं ज्ञातवान् । |
| (घ) तुलायाः अपरः भागः | (घ) वानरस्य समीपे अगच्छताम् । |

अष्टादशः पाठः

# देवभाषायाः महत्त्वम्

**चिरात्, अधुना, अस्माकम्, संस्कृतज्ञातारः, नास्ति, विहाय, अद्यापि, विश्वकर्मणः ।**

सुरेशः—मित्र माधव, प्रणामाः । चिरात् खलु, दृष्टः असि । अधुना किं पठसि ?

माधवः—प्रणामाः । प्रणामाः । अधुना अहम् अत्रैव संस्कृतविद्यालये पठामि ।

सुरेशः--मित्र, त्वं किमर्थं संस्कृतं पठसि ? संस्कृतस्य महत्त्वं किम् ? अस्मिन् विषये स्वमतं कथय ।

माधवः–कथयामि, मित्र कथयामि । किं त्वं न जानासि यत् संस्कृतं देवभाषा कथ्यते ? भाषाणाम् इयं प्राचीनतमा भाषा अस्ति । सर्वस्य देशस्य एका स्वकीया भाषा भवति । अस्माकं भारतीयानां भाषा संस्कृतभाषा अस्ति । संस्कृतं न केवलं भारते, अपि तु विश्वस्य अन्यस्मिन् अपि भागे लोकैः पठ्यते ।

सुरेशः--मित्र, कथय, कथम् इयं विश्वभाषा वर्तते ।

माधवः–शृणु मित्र, या विश्वस्य प्रायः सर्व-क्षेत्रेषु व्यवह्रियते सा विश्वभाषा । त्वं संसारे यत्र-कुत्रापि देशे गच्छ, सर्वत्र संस्कृतस्य आदरः अस्ति । अभारतीयाः अपि संस्कृत-भाषायां ग्रन्थान् अरचयन् । जर्मनदेशे संस्कृतस्य अति समृद्धिशालिनः पुस्तकालयाः सन्ति । सर्वेषाम् भारतीय-भाषाणां जननी संस्कृतम् इति कथ्यते । संस्कृतं पठित्वा आर्याणां सभ्यतां संस्कृतिं च जानीमः । भारतीयानां ऋषीणां सर्वाणि ज्ञानानि संस्कृते सुरक्षितानि सन्ति ।

सुरेशः--परन्तु, किं संस्कृतस्य अध्ययनेन जीविकां प्राप्नुवन्ति जनाः ?

माधवः–मित्र, त्वं केवलं जीविकां चिन्तयसि ! न तावत् जीविका शिक्षायाः मुख्यं लक्ष्यम् अस्ति । अधुना सर्वे शिक्षा-शास्त्रिणः संस्कृत-शिक्षायाः आवश्यकतां प्रतिपादयन्ति । संस्कृतं विना चरित्रबलं दुर्लभं भवति । अधुना सर्वकारेण अपि पाठ्यक्रमे प्रवेशिका-वर्गपर्यन्तं संस्कृतम् अनिवार्यं

कृतम् । सर्वासु उच्च-परीक्षासु संस्कृतस्य अध्यापनं भवति। अहं सत्यं कथयामि यत् उपनिषदं गीतां रामायणं च विना भारतं निर्धनं निर्बलं च भविष्यति। संस्कृतज्ञानं भारतीयैकत्वे आवश्यकं मन्ये।

सुरेशः– मित्र, परन्तु प्रष्टुम् इच्छामि यत् किं संस्कृते अपि गणित-विधि-अभियन्त्रणादि-विषयाः सन्ति ?

माधवः–मित्र, संस्कृतं न केवलं भाषां शिक्षयति, तत्र तु आधुनिकाः अपि बहवः विषयाः पाठ्यन्ते। गणित-शास्त्र प्रवर्त्तकस्य भास्कराचार्यस्य नाम को न जानाति। अद्यापि संसारे अस्य प्रशंसा भवति। विधि-विषये सामाजिक विषयः वर्णितः अस्ति। तत्र मनुः, याज्ञवल्क्यः, पराशरः अग्रगण्याः सन्ति, येषां महर्षीणां ग्रन्थान् लोकाः पठन्ति। अभियन्त्रण-विषये विश्वकर्मणः नाम को न जानाति ? पाणिनेः व्याकरणं संसारे श्रेष्ठतमं, यत् आरम्भ कालात् अद्यावधि लोके पूज्यते।

सुरेशः–-मित्र, त्वं धन्योऽसि यत्. संस्कृतं ज्ञात्वा ज्ञानस्य प्रचारं करोषि। अहमपि मनसा परिश्रमेण च संस्कृतं पठिष्यामि। राष्ट्रहिताय इयं सर्वोत्तमा सेवा अस्ति इति मन्ये। संस्कृतं चेत् विस्मरामः तदा भारतीय-भाषाणां साहित्यं निर्मूलमेव भविष्यति।

**अभ्यासः**

1. संस्कृत में उत्तर दो :–

(क) कथं संस्कृतभाषा विश्वभाषा वर्तते ?

(ख) विदेशे कुत्र संस्कृतस्य पुस्तकालयाः सन्ति ?
(ग) संस्कृताध्ययनस्य फलं वर्णय।
(घ) गणितशास्त्रस्य कः आचार्य आसीत् ?

2. संस्कृत के महत्त्व को अपनी मातृभाषा में लिखो।

3. निम्नलिखित शब्दों का अर्थ लिखकर उनका वाक्यों में प्रयोग करो :—
चिरात्, अधुना, अस्माकम्, प्रतिपादयन्ति, प्रष्टुम्।

4. निम्नलिखित शब्दों का विभक्ति-निर्देश करो :—
माधवः, देशे, सर्वकारेण, संस्कृतस्य, ग्रन्थान्।

5. संस्कृत में अनुवाद करो :—
(क) इस समय मैं यहीं पढ़ता हूँ।
(ख) तुम जहाँ-कहीं भी जाओ।
(ग) वह मातृभूमि को नहीं जानता है।
(घ) मैं भी संस्कृत पढ़ूँगा।

---

एकोनविंशः पाठः

# त्रयाणां धूर्त्तानां कथा

**यक्ष्यामि, पीवरतनुः, तादृशम्, वञ्चयित्वा, आदाय, अध्वानम्, सारमेयः, श्वा, युज्यते, स्तोकम्, वर्त्मना।**

कस्मिंश्चिद् ग्रामे मित्रशर्मा नाम ब्राह्मणः प्रतिवसति स्म। स कदाचित् माघे मासे यज्ञाय पशोः याचनायै ग्रामान्तरं गतः। तत्र तेन कश्चित् यजमानः याचितः—

"भो यजमान! आगामिन्याम् अमावास्यायाम् अहम् एकं यज्ञं यक्ष्यामि। तत् देहि मे पशुमेकम्। अथ स यजमानः

शास्त्रोक्तविधिना एकं पीवरतनुम् पशुं प्रदत्तवान् । सोऽपि इतश्चेतश्च गच्छन्तम् अवलोक्य तं स्कन्धे धृत्वा सत्वरं स्वपुराभिमुखं प्रचलितः ।

अथ तस्य मार्गे गच्छतः त्रयः धूर्त्ताः सम्मुखाः अभवन् । ते तादृशं पशुं स्कन्धम् आरूढम् अवलोक्य अकथयन् । अहो अस्य पशोः भक्षणात् अद्य माघमासस्य शैत्यं दूरीक्रियते । तदेनं वञ्चयित्वा पशुम् आदाय शीतत्राणं कुर्मः ।

अथ तेषाम् एकः वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा तं ब्राह्मणम् उक्तवान्––"भोः भोः ब्राह्मण ! एवं जनविरुद्धं हास्यकार्यं क्रियते, यदेषः कुक्कुरः अपवित्रः स्कन्धारूढो नीयते । ततः स कोपाभिभूतः अकथयत्––"अहो किमन्धो भवान् ? यत् अजं सारमेयं जानाति ?"

सोऽब्रवीत्–"भो ब्राह्मण, तथा कोपः न कार्यः यथेच्छं गम्यताम्"

अथ यावत् किंचिद् मार्गं गच्छति, तावत् द्वितीयो धूर्त्तः समुपेत्य उवाच–"भो ब्राह्मण, कष्टं कष्टम् !" यद्यपि अतिप्रियः ते अयं श्वा, तथापि स्कन्धम् आरोपयितुं न युज्यते । अथासौ सकोपमिदमाह–"भो किमन्धो भवान् ? यत् अजं सारमेयं वदति ।"

सोऽवदत्–"मा कोपं कुरु । अज्ञानात् मया अभिहितम् । त्वं यथारुचि समाचर इति ।"

अथ यावत् स्तोकं पन्थानं गच्छति तावत् तृतीयः अन्यवेशधारी धूर्त्तः सम्मुखं समुपेत्य तम् उवाच "भो अमुनाम् एतत् यत् त्वं

सारमेयं स्कन्धे धृत्वा नयसि ।" तत् त्यज्यताम् एषः, यावत् न कश्चित् अन्यः पश्यति । ततः दोलायितचित्तः स ब्राह्मणः तं पशुं सारमेयं निश्चित्य तत्रैव भूमौ अत्यजत् । नद्यां च स्नात्वा लज्जावनतमुखः स्वगृहं गतः ।

ततः ते त्रयो धूर्त्ताः मिलित्वा तम् अजम् आदाय हत्वा च तस्य मांसेन भोज्यम् अकुर्वन् ।

शिक्षा—धूर्त्तेषु कदापि विश्वासो न कर्त्तव्यः ।

**अभ्यासः**

1. संस्कृत में उत्तर दो :–

   (क) मित्रशर्मा ग्रामान्तरं कथम् अगच्छत् ?
   (ख) स यजमानं किम् अयाचत ?
   (ग) प्रथमः धूर्त्तः किमुक्तवान् ?
   (घ) कोपाविष्टः ब्राह्मणः किम् अकथयत् ?
   (ङ) द्वितीयः धूर्त्तः किम् उक्तवान् ?
   (च) कुपितः ब्राह्मणः किम् आह ?

2. निम्नलिखित शब्दों का अर्थ लिखकर वाक्यों में प्रयोग करो :—
   नद्याम्, समुपेत्य, यक्ष्यामि, अकथयन्, सारमेयः, श्वा ।

3. इस कहानी को अपनी मातृभाषा में लिखकर उससे मिलने वाली शिक्षा को लिखो ।

4. निम्नलिखित शब्दों का विभक्ति-निर्देश करो :–
मार्गे, अमावास्यायाम्, याचनायै, मांसेन, अजम् ।

5. संस्कृत में अनुवाद करो :–
(क) किसी गाँव में एक ब्राह्मण रहता था ।
(ख) मैं एक यज्ञ करूँगा ।
(ग) क्रोध नहीं करना चाहिए ।
(घ) अपनी इच्छा से जायँ ।
(ङ) अज्ञानवश मुझसे कहा गया ।

———

विंशः पाठः

# सुभाषितानि

**अभिवादनशीलस्य, निष्कृतिः, उच्यते, अनुद्वेगकरम्, कुतः।**

अभिवादनशीलस्य, नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते, आयुर् विद्या यशो बलम् ॥ 1 ॥

यं मातापितरौ क्लेशं, सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या, कर्त्तुं जन्मशतैरपि ॥ 2 ॥

एकाक्षरमपि गुरुः, यस्तु शिष्यं प्रबोधयेत् ।
पृथिव्यां नास्ति तद् द्रव्यं, यद् दत्वा ह्यनृणी भवेत् ॥ 3 ॥

क्षणशः कणशश्चैव, विद्यामर्थं च ' चिन्तयेत् ।
क्षणत्यागे कुतो विद्या, कणत्यागे कुतो धनम् ? । 4 ॥

अनुद्वेगकरं वाक्यं, सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव, वाङ्मयं तप उच्यते ॥ 5 ॥

**अभ्यासः**

1. संस्कृत में उत्तर दो :–

(क) अभिवादनशीलस्य कः लाभः भवति ?



(ख) विद्यामर्थञ्च कथं चिन्तयेत् ?

2. निम्नलिखित शब्दों का अर्थ लिखो :–
   अभिवादनशीलस्य, कुतः, उच्यते, आपदि ।

3. इस पाठ के श्लोकों को कण्ठस्थ कर उनका अर्थ लिखो ।

4. निम्नलिखित वाक्यों का संस्कृत में अनुवाद करो :–
   (क) नित्य प्रणाम करने वाले के आयु, विद्या, यश और बल ये चारों बढ़ते हैं ।
   (ख) माता-पिता के प्रिय कार्य करो ।
   (ग) पृथ्वी पर वैसा द्रव्य नहीं है ।
   (घ) विनय से वंश की परीक्षा होती है ।
   (ङ) वीरों की परीक्षा युद्धभूमि में होती है ।

---

एकविंशः पाठः

# सिंह-शृगालादीनां कथा

शृगालः, जम्बुकः, त्वचाम्, शूरः, द्रुतम्, माम ।

अस्ति कस्मिंश्चिद् वने महाचतुरको नाम शृगालः । स कदाचिद् अरण्ये मृतं गजं प्राप्तवान् । स तु तस्य परितः परिभ्रमति परं कठिनां त्वचां भेत्तुं न शक्नोति । अत्रावसरे इतश्चेतश्च विचरन् कश्चित् सिंहः तत्र समागतः ।

सिंहम् आगतं दृष्ट्वा शृगालः संयोजितकरयुगलः सविनयम् उवाच—"स्वामिन् तवार्थे अहम् इमं गजं रक्षामि । तदेनं भक्षयतु

स्वामी" । सिंहः तं प्राह–"अहम् अन्येन हतं सत्वं कदाचिदपि न भक्षयामि।" तत् तवैव अयं गजः। तत् श्रुत्वा शृगालः सानन्द-माहयुक्तमिदं स्वामिनो निज-भृत्येषु ।

सिंहे गते कश्चित् व्याघ्रः तत्र समागतः । तम् अपि दृष्ट्वा स व्यचिन्तयत् । अहो अयं दुरात्मा शूरश्च । अतः भेदं बिना साध्यो न भविष्यति ।

एवं विचार्य तस्याभिमुखो भूत्वा शृगालः उवाच–माम, कथम्-अत्र भवान् मृत्युमुखे प्रविष्टः ? अयं गजः सिंहेन व्यापादितः । माम अत्र रक्षणे नियुज्य स स्नानार्थं गतवान् । तेन गच्छता अहम् आदिष्टः–यदि कश्चित् व्याघ्रः अत्र समायाति, त्वया सुगुप्तं ममावेदनीयम् । अद्य इदं वनं मया निर्व्याघ्रं कर्त्तव्यम् । पूर्वं एकेन व्याघ्रेण मया व्यापादितः गजः भक्षयित्वा उच्छिष्टतां नीतः । तत् दिनाद् आरभ्य व्याघ्रान् प्रति कुपितोऽस्मि ।

तत् श्रुत्वा व्याघ्रः सन्त्रस्तः आह––"भो भागिनेय, देहि मे प्राणदक्षिणाम् । त्वया तस्य चिराय आयातस्य अपि मदीया वार्त्ता न कथनीया ।" एवमभिधाय स सत्वरं पलायितः ।

गते व्याघ्रे तत्र कश्चित् द्वीपी समायातः । तम् अपि दृष्ट्वा स व्यचिन्तयत्, दृढ़दंष्ट्रोऽयं चित्रकः । अतः अस्य दन्तैः एतस्य गजस्य यथा चर्मच्छेदो भवति, तथा करोमि । एवं निश्चित्य तम् उवाच–भो भगिनीसुत ! चिरात् दृष्टोऽसि, त्वञ्च बुभुक्षितः इव लक्ष्यसे । त्वं मे अतिथिः असि । एषः गजः सिंहेन हतः तिष्ठति । अहं च तस्य रक्षकः । यावत् सिंहः समायाति, तावत् अस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं गच्छ ।

स आह—माम। यदि एवं तदा न कार्यं मे मांसभक्षणेन। अहम् इतः अपयास्यामि। शृगाल उवाच—"भो अधीर, निःशंकः भूत्वा भक्षय त्वम्! तस्य आगमनं दूरतः एव अहं त्वां निवेदयिष्यामि।" ततः द्वीपी मांसं भक्षयितुं गजस्य चर्म अभिनत्। त्वचां भिन्नां विज्ञाय ससंभ्रमं जम्बुकः अकथयत्—"एषः सिंहः समायाति।" तत् श्रुत्वा चित्रको दूरं पलायितः।

ततः शृगालः चित्रककृतद्वारेण सुखेन हस्तिमांसम् अखादत्। नीतिः—"बुद्ध्या नहि परतरं कश्चित्।"

**अभ्यासः**

1. संस्कृत में उत्तर दो :—
   (क) शृगालस्य किं नाम आसीत्?
   (ख) शृगालः वने कं प्राप्तवान्?
   (ग) शृगालः सिंहं किम् उक्तवान्?
   (घ) शृगालः व्याघ्रं किम् अवदत्?
   (ङ) गजस्य चर्मच्छेदः कथम् अभवत्?
2. निम्नलिखित शब्दों का अर्थ लिखकर वाक्यों में प्रयोग करो :—
   शृगालः, भृत्येषु, भवान्, माम, मदीया।
3. इस कहानी को लिखकर उससे मिलनेवाली शिक्षा को लिखो।
4. निम्नलिखित शब्दों के धातु, लकार, पुरुष एवं वचन लिखो :—
   शक्नोति, समायाति, गच्छ, समागतः, भविष्यति।
5. निम्नलिखित वाक्यों का संस्कृत में अनुवाद करो :—
   (क) यह सुनकर बाघ भाग गया।
   (ख) तुम मेरे अतिथि हो।
   (ग) सिंह के जाने पर बाघ वहाँ आया।
   (घ) बहुत दिनों पर दिखाई देते हो।

द्वाविंशः पाठः

# विद्या-महिमा

**अपनीय, नियुक्ते, दिक्षु, वितनोति, सद्विद्या, वराकोदरपूरणे, भ्रातृभाज्यम्, व्यये कृते, प्रच्छन्नम् ।**

मातेव रक्षति पितेव हिते नियुङ्क्ते,
कान्तेवचाभिरमयत्यपनीय खेदम् ।
कीर्त्ति च दिक्षु विमलां वितनोति लक्ष्मीं,
किं किं न साधयति कल्पलतेव विद्या ? ।। 1 ।।

नक्षत्र-भूषणं चन्द्रो, नारीणां भूषणं पतिः ।
पृथिवी-भूषणं राजा, विद्या सर्वस्य भूषणम् ।। 2 ।।

सद्विद्या यदि का चिन्ता, वराकोदरपूरणे ?
शुकोऽपि लभते वृत्तिं, 'हरे राम' इति ब्रुवन् ।। 3 ।।

सुखार्थी चेत् त्यजेद् विद्यां विद्यार्थी चेत् त्यजेत् सुखम् ।
सुखार्थिनः कुतो विद्या, कुतो विद्यार्थिनः सुखम् ? ।। 4 ।।

न चौरहार्यं न च राजहार्यं,
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्द्धत एव नित्यं,
विद्या-धनं सर्व-धन-प्रधानम् ।। 5 ।।

विद्या नाम नरस्य रूपमधिकं, प्रच्छन्न-गुप्तं धनम् ।
विद्या भोगकरी यशः-सुखकरी, विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने, विद्या परा देवता ।
विद्या राजसु पूजिता न तु धनं, विद्याविहीनः पशुः ॥6॥

## अभ्यासः

1. संस्कृत में उत्तर दो :–
   (क) विद्या कथं रक्षति ?
   (ख) विद्या कस्य भूषणम् ?
   (ग) शुकः कथं वृत्तिं लभते ?
   (घ) सर्वप्रधानं धनं किम् अस्ति ?
   (ङ) नरस्य अधिकं रूपं किम् अस्ति ?
2. "विद्यामहिमा" के पाँच श्लोकों का अर्थ अपनी मातृभाषा में लिखो।
3. इस पाठ के श्लोकों को कण्ठस्थ करो।
4. नीचे लिखे वाक्यों का संस्कृत में अनुवाद करो :–
   (क) कल्पलता की तरह विद्या क्या-क्या नहीं सफल बनाती है ?
   (ख) विद्या से हीन मनुष्य पशु है।
   (ग) नारियों का भूषण पति होता है।
   (घ) विद्या खर्च करने पर सदा बढ़ती है।
   (ङ) विद्या परदेश में मित्र होती है।
5. निम्नलिखित शब्दों का वाक्यों में प्रयोग करो :–
   रक्षति, वितनोति, सर्वस्य, गुप्तं धनम्, भ्रातृभाज्यम् ।

6. इस पाठ से किसी एक श्लोक को अपनी अभ्यास-पुस्तिका में लिखो तथा उसके कर्त्ता और क्रिया को रेखांकित करो।

7. रिक्त स्थानों को भरो :–

(क) विद्या बन्धुजनः ·····।

(ख) विद्या ····· रक्षति।

(ग) विद्या नरस्य ·····।

(घ) विद्याविहीनः ·····।

---

## प्रथमः पाठः

अखण्ड=सम्पूर्ण ।

तिमिरान्धस्य—तिमिर+अन्धस्य=मूर्खतारूपी अन्धकार का ।

ज्ञानाञ्जन—ज्ञान+अञ्जन =ज्ञानरूपी अञ्जन ।

उन्मीलितम्—उत्+मीलितम्=खोला है ।

निरामयाः—निः+आमयाः=विकार रहित (बहुवचन) ।

वक्रोऽपि—वक्रः+अपि=कुटिल होने पर भी ।

## द्वितीयः पाठः

राज्ञी=राजन् का स्त्रीलिंग रूप, रानी, रूप नदी के जैसा ।
सर्वकारेण=सरकार के द्वारा ।
धूमयानस्थिति-स्थानम्=रेलवे स्टेशन ।
वीथिषु=गलियों में ।
मार्जन्या=झाड़ू से ।
जलयानस्थिति-स्थानम्=जहाज घाट ।

**टिप्पणी :**

चाणक्य– अर्थशास्त्र के महान् विद्वान् थे। नन्द वंश के विनाशक, महान् राजनीतिज्ञ तथा चन्द्रगुप्त के गुरु थे। इनका विचार विश्व में समादृत है।

अशोक –बड़े उदार एवं कर्मठ सम्राट्। इनकी राजधानी पटना में थी। कलिंग युद्ध में हिंसा के नृत्य को देखकर इन्होंने युद्ध करना छोड़ दिया था। बौद्ध धर्म के बड़े समर्थक थे।

संघमित्रा–अशोक की बेटी थी। बौद्ध धर्म के प्रचार के लिए महेन्द्र के साथ लंका गई थी, ऐसा सुना जाता है।

महेन्द्र –इसी वंश का प्रतापी राजा था।

## तृतीयः पाठः

ब्रह्मचारी=विद्या अध्ययन करनेवाले विद्यार्थी।
आच्छन्नम्=ढँका हुआ।
अवरुद्धम्=रुका हुआ।
सरिताः=नदियाँ।
नर्झराः=झरने।
कुल्याः=नहरें, नाले, छोटी नदियाँ।
दीर्घिकाः=छोटी पोखरियाँ (वहुवचन रूप)।
जलौघेन—जल+ओघेन=जलसमूह से।
झंझावातैः=तूफानों से।
रजन्याम्=रात में।

**टिप्पणी :** आरुणि की कथा महाभारत में वर्णित है। धौम्य ऋषि प्राचीन भारत के आदर्श गुरु थे।
आरुणि प्राचीन भारत का आदर्श विद्यार्थी था।

## चतुर्थः पाठः

अर्थाः=धन्, दौलत।
संहतिः=जुटाव, मेल, समुदाय, ढेर, राशि।
विदधीत=करना चाहिए।
छिद्रेष्वनर्थाः=छिद्रेषु+अनर्थाः=छिद्रों में, अनर्थ।
महताम्=महापुरुषों के।
उपैति=प्राप्त करता है।

## पञ्चमः पाठः

शशकः=खरहा।
प्रकाशम्=जोर से (उच्च स्वर में बोलने में इसका प्रयोग होता है)।
पादपम्=पेड़ को (द्वितीया एकवचन का रूप है)।

शाद्वलायाम्=हरी घासोंवाली भूमि पर।
दीर्घसूत्री=किसी कार्य में अनावश्यक देर लगाने वाला।
अतन्द्रितः=आलस रहित।

### षष्ठः पाठः

अचिरादेव=शीघ्र ही (अचिरात्+एव)।
औदार्येण=उदारता से।
अयाचत=मांगा (याच् धातु लङ लकार प्रथम पुरुष एकवचन का रूप)।
अहर्निशम्=दिन-रात (अहः+निशम्)।
अभियन्त्रणस्य=इन्जीनियरिंग का।
खनि-शास्त्रस्य=खनिज शास्त्र का (खान विषयक विद्या का)।
विधिशास्त्रस्य=वकालत विषयक शास्त्र का।
ख्रीष्टाब्दः=ईसा से संचालित वर्ष (ईसवी के लिए)।

### सप्तमः पाठः

क्रीडाक्षेत्रम्=खेलने का मैदान।
किसलयानि=नए-नए लाल पल्लव।
प्रस्फुटन्ति=निकलते हैं।
अन्विष्यति=खोजता है।
वपन्ति=बोते हैं।
कर्दमाः=कीचड़।
शुभ्राः=स्वच्छ, उजले रंग के।
वारि=पानी।
वान्ति=बहती हैं ("वा" धातु प्रथम पुरुष बहुवचन का रूप)।

### अष्टमः पाठः

लघुचेतसाम्=छोटे विचार वालों के।
वसुधैव=पृथ्वी ही (वसुधा+एव)।
प्रज्ञा=विवेक, बुद्धि।

## नवमः पाठः

प्रेषितवन्तः=भेजा (वहुवचन)।
निरूपितः=देखा गया।
काननराज्ये=जंगली राज्य में।
निमग्नः=फँस गया।
हातव्याः=त्यागने चाहिए।
सकाशम्=समीप।

## दशमः पाठः

समक्षे=सामने में।
श्रोतुम्=सुनने के लिए (श्रु धातु तुमुन् प्रत्यय)।
अम्बा=माता।
कुत्रापि=कहीं भी (कुत्र+अपि)।
साधुवादाः=धन्यवाद के लिए प्रयुक्त शब्द।

## एकादशः पाठः

उदेति=उगता है।
अहोरात्रम्=दिन-रात।
अपसरति=हटता है।
प्रसरति=फैलता है।
नीडान्=घोसलों को।
निधाय=रखकर।
रञ्जितम्=रंगा हुआ।
ब्रह्ममुहूर्ते=ब्रह्ममुहूर्त्त सर्योदय के पूर्व प्रायः 4 बजे के समय को कहते हैं। विद्याभ्यास तथा साधना का यह वड़ा उत्तम समय है।

## द्वादशः पाठः

वक्तव्यम्=बोलना चाहिए।
पुस्तकस्था=पुस्तक में रहनेवाली।
परदारेषु=पराई स्त्रियों में।
सर्वभूतेषु=सभी जीवों में।
तमः=अन्धकार।

### त्रयोदशः पाठः

उन्नायकः=ऊपर उठाने वाला।
उद्धारकः=संकट से निकालने वाला।
चित्रगुप्तवंशे=कायस्थ कुल में।
विधिव्यवसाय=वकालत।
पाषाणमयी=पत्थर की बनी।

### चतुर्दशः पाठः

मनसि=मन में।
आरुह्य=चढ़कर।

### पञ्चदशः पाठः

वज्रादपि—वज्रात्+अपि=वज्र से भी।
कुसुमादपि—कुसुमात्+अपि=फूल से भी।
निरस्त पादपे=जहाँ वृक्ष नहीं है वहाँ।
एरण्डः=रेंड।
द्रुमायते=पेड़ की भाँति आचरण करता है।
प्रदीप्ते=जल जाने पर।
प्रक्षालनाद्धि—प्रक्षालनात्+हि=क्योंकि धोने से।
वाग्मिता=सार तत्त्व बोलना।
कल्पलतेव—कल्पलता+इव=कल्प वृक्ष के जैसा। 'कल्प वृक्ष' की चर्चा साहित्य में है। यह एक ऐसा वृक्ष है, जिससे जो कुछ मांगा जाय वही प्राप्त हो जाता है।
अवलोकयन्ति=देखते हैं।

### षोडशः पाठः

बहुशः=बहुत बार।
अवरुद्धम् करोति स्म=रोका (अव+रुध+क्त)।

अवनतम् कृतवान्=झुकाया (अव्+नम्+क्त)।

मित्रावरुणौ=मित्र और वरुण नामक दो सहचर देवता। ऋग्वेद के मन्त्रों में इनकी चर्चा है।
अपातयत्=गिराया।

### सप्तदशः पाठः

स्थापयति=रखता है।
तुलायाम्=तराजू पर।
तुलाकोटिम्=तराजू की डंडी को।
स्तुवन्तु=प्रशंसा करें।
धीराः=बुद्धिमान् लोग।
वञ्चयति=ठगता है।

### अष्टादशः पाठः

चिरात्=बहुत दिनों पर।
अस्माकम्=हमलोगों का।
संस्कृतज्ञातारः=संस्कृत जानने वाले।
विहाय=छोड़कर (वि+हा+ल्यप्)।
अद्यापि=आज भी (अद्य+अपि)।
विश्वकर्मणः=विश्वकर्मा के (टिप्पणी देखें)।

**टिप्पणी :**

मनु—ये बड़े विद्वान् आचार्य थे। सामाजिक उत्तम व्यवस्था के लिए इन्होंने "मनुस्मृति" नामक एक धर्मशास्त्र ग्रन्थ लिखा।

याज्ञवल्क्य—ये मिथिला के एक उद्भट विद्वान् एवं ब्रह्मज्ञानी थे। इनकी लिखी हुई "याज्ञवल्क्य स्मृति" आज भी उत्तम विचार के लिए मान्य है।

पराशर—ये ज्योतिष शास्त्र के प्रकाण्ड विद्वान् थे। लघुपाराशरी तथा बृहत् पाराशरी इनके अपूर्व ग्रन्थ हैं।

विश्वकर्मा—ये देवताओं के अभियन्ता थे। आज भी यंत्र विद्या के शिक्षक और छात्र इनकी पूजाकर अपना काम प्रारम्भ करते हैं।

### एकोनविंशः पाठः

यक्ष्यामि=यज्ञ करूँगा (यज्+लृट् प्रथम पुरुष एकवचन)।
पीवरतनुः=स्थूल शरीर वाला।

तादृशम्=वैसा।

वंचयित्वा=ठगकर ।
आदाय=लेकर ।
अध्वानम्=रास्ते को ।
श्वा=कुत्ता ।
युज्यते=ठीक है ।
स्तोकम्=थोड़ा ।
वर्त्मना=रास्ते से ।

### विंशः पाठः

अभिवादनशीलस्य=प्रणाम करने वाले का ।
निष्कृतिः=उद्धार का उपाय ।
उच्यते=कहा जाता है ।
अनुद्वेगकरम्=व्याकुल नहीं बनाने वाला ।

### एकविंशः पाठः

त्वचाम्=चमड़े को ।
शरः=वाण ।
द्रुतम्=जल्दी ।
माम=मातुल, मामा, माता का भाई ।

### द्वाविंशः पाठः

अपनीय=दूर हटकर ।
नियुङ्क्ते=लगाती है ।
दिक्षु=दिशाओं में ।
वितनोति=फैलाती है ।
सद्विद्या=अच्छी विद्या ।
वराकोदरपूरणे=तुच्छ पेट भरने में (वराक+उदरपूरणे) ।
भ्रातृभाज्यम्=भाइयों में बाँटने योग्य ।
व्यये कृते=खर्च करने पर ।
प्रच्छन्न=छिपा हुआ ।